नि । गावः । गोऽस्थे । असदन् । नि । मृगासः । अविक्षत ।
नि । केतवः । जनानाम् । नि । अदृष्टाः । अलिप्सत ॥ ४ ॥

वेङ्कट० प्रदोषवेलायां स्वापार्थम् गावः गोष्ठे नि असदन् । तथा मृगाश्च नि अविक्षत । तथा बुभुक्षूणां जनानाम् प्रज्ञानानि चोपरमन्ति । अस्यां वेलायां सर्पाः बिलादुत्थाय[1] विषेण मामलिप्सन् ॥ ४ ॥

एत उ त्ये प्रत्यदृश्रन् प्रदोषं तस्करा इव । अदृष्टा विश्वदृष्टाः प्रतिबुद्धा अभूतन ॥५॥

एते । ऊँ इति । त्ये । प्रति । अदृश्रन् । प्रऽदोषम् । तस्कराःऽइव ।
अदृष्टाः । विश्वऽदृष्टाः । प्रतिऽबुद्धाः । अभूतन ॥ ५ ॥

वेङ्कट० अपि च अमी रात्रिमुखम्[2] प्रति दृश्यन्ते चोरा इव । तेऽमी सर्वैः अदृष्टाः स्वयं सूक्ष्मेण चक्षुषा दृष्टविश्वजनाः । यूयम् प्रतिबुद्धाः स्थ[3] ॥ ५ ॥

[4]इति द्वितीयाष्टके पञ्चमाध्याये चतुर्दशो वर्गः[4] ॥

द्यौर्वः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा ।
अदृष्टा विश्वदृष्टास्तिष्ठतेलयता सु कम् ॥ ६ ॥

द्यौः । वः । पिता । पृथिवी । माता । सोमः । भ्राता । अदितिः । स्वसा ।
अदृष्टाः । विश्वऽदृष्टाः । तिष्ठत । इलयत । सु । कम् ॥ ६ ॥

वेङ्कट० "[5]ये वामी रोचने[5] दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदस्कृतं[6] तेभ्यः सर्पेभ्यो नमः" ( मा १३,८ ) इति मन्त्रः । यूयमेवंविधाभिजनाः[7] यथासुखम् तिष्ठत[8] सकाशात् च[9] शोभनम् ॥ ६ ॥

ये अंस्या ये अङ्ग्याः सूचीका ये प्रकङ्कताः ।
अदृष्टाः किं चनेह वः सर्वे साकं नि जस्यत ॥ ७ ॥

ये । अंस्याः । ये । अङ्ग्याः । सूचीकाः । ये । प्रऽकङ्कताः ।
अदृष्टाः । किम् । चन । इह । वः । सर्वे । साकम् । नि । जस्यत ॥ ७ ॥

वेङ्कट० ये अंसेन प्रहरन्ति[1] ये[10] च अङ्गैः ये वा पुच्छाग्रैः ये वा वृन्तैः प्रहरन्ति[11] तेषां सर्वेषां किम् अस्मिन् मनुष्ये कार्यम् । दीर्घमस्मात्[12] साकम् नितराम् उपक्षीणा भवत ॥ ७ ॥

उत् पुरस्तात् सूर्य एति विश्वदृष्टो अदृष्टहा ।
अदृष्टान्त्सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥ ८ ॥

---

१. उत्थाय[1] वि[1]. २. रात्रिमुखम् वि[1]; रात्रिमुखम् कर्प. ३. स्थः कर्प. ४-४. नास्ति मूको. ५-५. ये दो रोच[°] वि[°]; ये दा रो[°] कप. ६. "स्त्रिर्मेला वि[°] अ[°]. ७. विभव मूको; हे भरा । इति पाठभ्रंशः. ८. नास्ति वि[1] कर्प. ९. वहन्ति वि[1] कर्प. १०. ये: वि[1]. ११. प्रहरन्ति वि[1] कर्प. १२. अस्मात् मूको.




उत् । पुरस्तात् । सूर्यः । एति । विश्वऽदृष्टः । अदृष्टऽहा ।
अदृष्टान् । सर्वान् । जम्भयन् । सर्वाः । च । यातुऽधान्यः ॥ ८ ॥

वेङ्कट० एभिः[1] मन्त्रैर्विभीषिका[2] क्रियते । हे सर्पाः ! असौ सूर्यः पुरस्तात् उत् एति दृष्टसर्वजनः सर्पाणां हन्ता सर्वान् एव सर्पान् विनाशयन् सर्वाः च रात्रौ वर्तमाना हिंसाविलयमुखा यातुधानजातीः ॥ ८ ॥

उदपप्तदसौ सूर्यः पुरु विश्वानि जूर्वन् । आदित्यः पर्वतेभ्यो विश्वदृष्टो अदृष्टहा ॥९॥

उत् । अपप्तत् । असौ । सूर्यः । पुरु । विश्वानि । जूर्वन् । आदित्यः ।
पर्वतेभ्यः । विश्वऽदृष्टः । अदृष्टऽहा ॥ ९ ॥

वेङ्कट० उदपप्तत् असौ सूर्यः पुरूणि व्याप्तानि रक्षांसि हिंसन् आदित्यः उदयपर्वतेभ्यः ॥ ९ ॥

सूर्ये विषमा सजामि दृतिं सुरावतो गृहे ।
सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥१०॥

सूर्ये । विषम् । आ । सजामि । दृतिम् । सुराऽवतः । गृहे ॥ सः । चित् । नु । न । मराति ।
नो इति । वयम् । मराम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१०॥

वेङ्कट० सूर्ये अहम्[3] एतद् विषम् आ सजामि यथा सुरार्थी दृतिम् सुराकारगृहे मावदेवासजति । सः च सूर्यः कदाचिद् अपि विषक्लिष्टोऽपि न म्रियते तथैव वयम् अपि न म्रियेमहि । दूरे विषस्य योजनम् इन्द्रः करोतु । मधुरा सूर्ये दीप्तिः सुमुम्बाख्या च[4] यन्नुभसमाप्यायपन्ती विष ! त्वा मधु करोतु ॥ १० ॥

[5]इति द्वितीयाष्टके पञ्चमाध्याये पञ्चदशो वर्गः[5] ॥

इयत्तिका शकुन्तिका सका जघास ते विषम् ।
सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥११॥

इयत्तिका । शकुन्तिका । सका । जघास । ते । विषम् ॥ सो इति । चित् । नु । न । मराति ।
नो इति । वयम् । मराम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥

वेङ्कट० इयत्येषा[6] भवतीति प्रादेशमात्रपरिमाणां शकुन्तिकां निर्दिशति, पिण्डमात्रां[7] वा । तत्प्रवर्णा सर्पधाविनीम् । इत्वा सा तव सर्प ! विषम् भक्षयति[8] ॥ ११ ॥

---

१. एवं वि[1] वर्ष. २. °षि वर्ष. ३. तद् वि[1] वर्ष. ४. नास्ति वि[1] वर्ष. ५-५. नास्ति मूको.
६. इयत्येषा वि[1] ऋ वर्ष. ७. °मात्रं मूको. ८. भक्षति वि[3].

त्रिः सप्त विष्पुलिङ्गका विषस्य पुष्यमक्षन् ।
ताश्चिन्नु न मरन्ति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥१२

त्रिः । सप्त । विष्पुलिङ्गकाः । विषस्य । पुष्यम् । अक्षन् ॥ ताः । चित् । नु । न । मरन्ति । न
इति । वयम् । मराम् । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१

वेङ्कट० अयं तान्त्रिकाणां भणितिप्रकारः । विषचटिका[1] विष्पुलिङ्गकाः[2] सखीभूताः[3] सर्पामतितिष्ठन्ति
एकविंशतिः विष्पुलिङ्गकाः "विषस्य अग्रम्"[4] अश्नन्ति ॥ १२ ॥

नवानां नवतीनां विषस्य रोपुषीणाम् ।
सर्वासामग्रभं नामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ १३ ॥

नवानाम् । नवतीनाम् । विषस्य । रोपुषीणाम् ।
सर्वासाम् । अग्रभम् । नाम । आरे । अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१३॥

वेङ्कट० ओषधीनामेकोनशतं[5] विषं भवति । रुधिरक्लेदनकर्त्री । तासां सर्वासाम् एवाहम् नाम
अग्रभम् 'इयमेवग्राहीति'[6] ॥ १३ ॥

त्रिः सप्त मयूर्यः सप्त स्वसारो अग्रुवः । तास्ते विषं वि जभ्रिर उदकं कुम्भिनीरिव ॥१४॥

त्रिः । सप्त । मयूर्यः । सप्त । स्वसारः । अग्रुवः ।
ताः । ते । विषम् । वि । जभ्रिरे । उदकम् । कुम्भिनीःऽइव ॥ १४ ॥

वेङ्कट० एकविंशतिः मयूर्यः, सप्त च स्वयं सरन्त्यः[7] गङ्गाद्या नद्यः[8], ताः ते सर्प! विषम् विविधं
हरन्ति, यथा उदकम् कुम्भवत्यः स्त्रियः ॥ १४ ॥

इयत्तकः कुषुम्भकस्तकं भिनद्म्यश्मना । ततो विषं प्र वावृते पराचीरनु संवतः ॥१५॥

इयत्तकः । कुषुम्भकः । तकम् । भिनद्मि । अश्मना ।
ततः । विषम् । प्र । ववृते । पराचीः । अनु । सम्ऽवतः ॥ १५ ॥

वेङ्कट० इयत्प्रमाणः नकुलः, स नेदानीं[9] यदि तव विषं हन्ति, ततः तकम् अयुक्तकारिणम्
अहम् अश्मना भिनद्मि । ततश्च भीतः स इहागच्छति । ततः च विषम् हन्तुम् बभ्रुको
भवति दूरस्थाः भूमीः प्रति ॥ १५ ॥

---

1. °चमिका वि[1] अ[1]. 2. विपुलि° वि[1] लर्पं; हविष्कुलि° वि[1] अ[1]. 3. संसरीभूताः (ता) वि[1];
सखीभूताः वि[1] अ[1] क लर्पं. ४-४. विषं सार्धं अ[1]. विषं प्रामं लर्पं; विषभाम ('भा वि[1])म् वि[1], °-
५. एकोनशतम् वि[1] अ[1]. ६ ६. इयमेव नाम्नि भवति इत्यग्रे नाम्नीति वि[1]. ७. सरस्वत्यः वि[1] अ[1] लर्पं
८. नास्ति वि[1] लर्पं. ९. नेदानी वि[1] क लर्पं.

कुषुम्भकस्तदंब्रवीद् गिरेः प्रंवर्तमानुकः । वृश्चिकस्यारसं विषमंरसं वृंश्चिक ते विषम् ॥१६॥

कुषुम्भकः । तत् । अब्रवीत् । गिरेः । प्रऽवर्तमानकः ।

वृश्चिकस्य । अरसम् । विषम् । अरसम् । वृश्चिक । ते । विषम् ॥ १६ ॥

वेङ्कट० गिरेः चरणार्थे प्रवर्तमानः नकुलः तत् इदं वचनम्[1] अब्रवीत्, वृश्चिकस्य विषम् अरसम् भवति । अरसम् वृश्चिक ! ते विषम् इति ॥ १६ ॥

[2]इति द्वितीयाष्टके पञ्चमाध्याये षोडशो वर्गः[2] ॥

— , —

इति ऋग्वेदे सभाष्ये प्रथमं मण्डलं समाप्तम् ॥



1. नास्ति वि[1] ध[1] २-२. नास्ति मूको.

# शोधपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८५ | ५ | बद्वधे | बहुधे |
| ,, | १८ | तयापि | तथापि |
| ,, | २५ | नास्ति° | नास्ति |
| ,, | ३० | तथापि | तथापि |
| ५८८ | ७ | वृक्षा | वृक्षा |
| ५९५ | ५ | यदधात् | न्यदधात् |
| ६०१ | ७ | दार्शश्च | दार्श्यश्च |
| ६०३ | ५ | °ध्रवणे न | °श्रवणेन |
| ६०४ | १३ | सह गान्धा: | सहगन्धा: |
| ६०८ | १६ | °रमिश्च° | °रश्मिश्च° |
| ६१० | १३ | प्रवेभिः | प्रवेभिः |
| ६१२ | २ | देवताः | देवता |
| ६१७ | ८ | दृश्यमानः | दृश्यमानाः |
| ,, | २६ | °रित्येषु | °रित्येव |
| ६२१ | ८ | देवताः | देवता |
| ,, | १३ | शृणत | शृणत |
| ६२६ | ३ | देवताः | देवता |
| ६३१ | ५ | पतत् | पतत |
| ,, | १० | देवताः | देवता |
| ६३६ | १० | देवताः | देवता |
| ६३९ | २४ | शुभ्रम्° | शुभ्रम्° |
| ६४२ | २५ | देवताः | देवता |
| ६५७ | ४ | सामर्थ्या- | तामर्थ्यो- |
| ६५९ | २६ | र्थति° | र्थिः° |
| ६६७ | २३ | मताति | मताति |
| ६७१ | २ | °वर्णनो | °वर्तन्ते |
| ,, | २३ | देवते | देवता |
| ६७६ | ४ | वर्णितारौ | पार्थिवारौ ! |
| ६७२ | १५ | सम्यमाम° | सम्यागाम° |
| ६८० | १ | °दृवा | °देवा |
| ,, | ११ | सदृशि° | सदृशीव° |
| ६८३ | १ | आध्वंयुः | अध्वर्युः |
| ६८६ | ७ | रथेभ्र्यः | रथेभ्यः |
| ६९२ | ३ | द्वितीश्च° | द्विरश्चि° |
| ६९७ | २५ | यथंमी° | पंचमी° |
| ७०७ | १५ | °पावर्तते | °पावर्तत |
| ७१३ | २५ | कार्चि° | कचि° |
| ७१२ | २० | रवतन्दः | रवपशब्दः |
| ७२७ | ४ | सिन्धुः। | अदितिः। सिन्धुः। |
| ७३४ | १ | हरिडभिः | हरिडभिः |
| ७३९ | १६ | °काश्वा- | °कश्वा- |
| ७४० | ११ | °क्रमनुपकल्पम् | °क्तोऽनुपकल्पः |
| ७४३ | १७ | दुन्द्रियम् | दुन्द्रियम् |
| ७४७ | २ | मविन्दत् | अविन्दत् |
| ,, | ४ | सुवस् | सुदम् |
| ,, | ९ | °न्यारवः | °न्यारोः |
| ७५० | २१ | चिन्नस° | चित्राम्सु° |
| ७५५ | २० | इन्द्रिया | इन्द्रियाय |
| ७५९ | १२ | °मपान्य° | °ममन्य° |
| ,, | १७ | देवता· | देवता |
| ,, | २२ | °सारयेरय° | °सारयरेय° |
| ७६१ | २० | रोदुसी | रोदसी |
| ७६३ | १ | मश्नमम् | पक्ष्मम् |
| ,, | ६,१० | महराचन् | महरामन् |
| ७६५ | १४ | अतता | आततः |
| ७६६ | २४ | तरन्तम् | तरन्तम् |
| ७६९ | २ | येगुः | देवः |
| ,, | १३ | दृशा | दृशा |
| ७७७ | २७ | आर्नाथ | न आर्नाय |
| ७८२ | ५ | पुरुषि° | पुरुषि° |
| ७८४ | २० | दवेः! | देवाः! |
| ७८७ | १ | निराप्यमयो | निराप्यमायो |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७७० | २१ | मुळफन्तः | मुळ्यन्तः |
| ७७९ | ११ | ममन्हताम् | ममहन्ताम् |
| ७९९ | ६ | °विम्बावा° | °विम्बया° |
| ८०३ | ४ | पूळयथि° | पूळयि° |
| ८०६ | १० | ॐ ह्रुर्ति | ॐ ह्रीं |
| ८०८ | १ | णिं° | नि° |
| ,, | ९ | युवनरा | युवं नरा |
| ८०९ | १४ | असुराः | असुरैः |
| ८०९ | २१ | स्वः | स्वः आदित्यम् |
| ८१० | ११ | °दाद्दुद्धा° | °द्वादुद्धा° |
| ८११ | २२ | यार्थे° | अयार्थे° |
| ८१८ | २८ | समर्थौ | सामर्थौ |
| ८१९ | ४ | न | नः |
| ८२४ | १ | सुरामश्वि° | सुराममश्वि° |
| ,, | २१ | सरढा | सरढो |
| ८२७ | ७ | °मैवा | °मेव |
| ८३२ | १० | दीसाः | दीप्ताः |
| ८३४ | २५ | दशना° | दर्शना° |
| ८४१ | १० | °निधनमेवं° | °निध एवं |
| ८४१ | ८ | प्रथमाः | प्रथमा |
| ८४७ | ५ | कतुम् | कर्तुम् |
| ८७२ | ४ | ओकारी | ओकारो! |
| ८७३ | २६ | °वसीमेयो° | °वसीमयो° |
| ८८८ | १६ | पद्रेड° | पेद्रेड° |
| ८९६ | २९ | वेहयित्री | वैहयित्री |
| ९०५ | २६ | यतम् | स्यतम् |
| ९०७ | १ | शिप्रहा° | शिप्रवज्ञा° |
| ९०९ | ६ | हुवे | हवे |
| ,, | १४ | मनोज्ञवम् | मनोजुवम् |
| ९२६ | २३ | °त्रिकरेण | °द्विकरणेन |
| ९२७ | ९ | दृष्ट | वृक्ष |
| ९३१ | ३ | निरोधी | निरोद्धी |
| ९३२ | १५ | वर्तमा° | वर्धमा° |
| ,, | ३० | °नास्ति | °नसि |
| ९३६ | २६ | दुर्हणा° | दुर्हणा° |
| ९६३ | १५ | °श्वसुखः | °श्वसुखः |
| ९६६ | ९ | शत्रभ्यो | शत्रुभ्यो |
| ९७२ | ८ | °र्युज्जव | °र्युञ्जव |
| ९७४ | २२ | तुज्जतै | तुञ्जतै |
| ९७७ | ४ | °ध्यडये | °ध्याये |
| ९९५ | २० | रात्रीः | रात्रिः |
| ९९६ | ४ | आध्रुवन्यतः | आध्रुवपर्यन्तः |
| ९९७ | २ | उप वसद् | उपदस्तं |
| १००० | २२ | दुंरते। | वृथा। दुंरते |
| १००३ | ६ | जगयुः | जुगुर्युः |
| १००४ | २० | धावतो | धावतो |
| १००८ | २४ | यज्ञियाः | प्रज्ञियाः |
| १०१२ | २ | °युच्छम् | °युच्छन् |
| १०२० | ८ | यन् | पून् |
| १०२३ | १९ | युज्जाथे | युञ्जाथे |
| १०२७ | १ | °मं ग्रि° | °मंग्रि° |
| १०५० | २५ | °सुभिर्ग्° | °सुभिर्ग्° |
| १०६१ | ६ | वृषयन्तु° | वृषयुम्सु° |
| १०६७ | २३ | विपूर्ची° | विपूर्ची° |
| १०७१ | २४ | तेनायन् | तेनायजन् |
| १११९ | २२ | °स्यौ मम! | °दयौ! मम |
| ११२१ | १२ | कर्मवन्तो | कर्मवन्तौ |
| ११२३ | १६ | °गुण | °गुणं |
| ११२७ | ६ | वंदुके | वंदुके |
| ११२९ | १४ | °स्पंद् | °न्र्पंद् |
| ११३२ | ६ | °विलासः | °विलासम् |
| ११४० | २४ | °जनकः | °जननः |
| ११४२ | १९ | °कुद्रवाः | °कुद्रसाः |
| ११४४ | ४ | सुराम् | सराम् |